(२२८) त्रिषु लिङ्गेषु समानो नकारान्तः 'अष्टन्' शब्दो नित्यं बहुवचनान्तः।

प्र० अष्टौ,[१] द्वि० अष्टौ, तृ० अष्टाभिः, च० अष्टाभ्यः, पं० अष्टाभ्यः, ष० अष्टानाम्, स० अष्टासु, सम्बो० हे अष्टौ।

(२२९) 'अष्टन आ विभक्तौ' इत्यात्वाभावे 'अष्टन्' शब्दः।

प्र० अष्ट,[२] द्वि० अष्ट, तृ० अष्टभिः, च० अष्टभ्यः, पं० अष्टभ्यः, ष० अष्टानाम्, स० अष्टसु, सम्बो० हे अष्ट।

(२३०) नकारान्तस्त्रिषु लिङ्गेषु समानो 'नवन्' शब्दः।

प्र० नव, द्वि० नव, तृ० नवभिः, च० नवभ्यः, पं० नवभ्यः, ष० नवानाम्, स० नवसु, सम्बो० हे नव।

(२३१) नकारान्तस्त्रिषु लिङ्गेषु समानो 'दशन्' शब्दः।

प्र० दश, द्वि० दश, तृ० दशभिः, च० दशभ्यः, पं० दशभ्यः, ष० दशानाम्, स० दशसु, सम्बो० हे दश।

(२३२) नकारान्तस्त्रिषु लिङ्गेषु समानः 'एकादशन्' शब्दः।

प्र० एकादश, द्वि० एकादश, तृ० एकादशभिः, च० एकादशभ्यः, पं० एकादशभ्यः, ष० एकादशानाम्, स० एकादशसु, सम्बो० हे एकादश।

एवं द्वादशन्, त्रयोदशन्, चतुर्दशन्, पञ्चदशन्, सप्तदशन्, अष्टादशन् शब्दाः त्रिषु लिङ्गेषु समानाः पञ्चन्शब्दवत्।

(२३३) स्त्रीलिङ्गः 'ऊनविंशति' शब्दः नित्यैकवचनान्तः।

प्र० ऊनविंशतिः, द्वि० ऊनविंशतिम्, तृ० ऊनविंशत्या, च० ऊनविंशत्यै-ऊनविंशतये, पं० ऊनविंशत्याः-ऊनविंशतेः, ष० ऊनविंशत्याः-ऊनविंशतेः, स० ऊनविंशत्याम्-ऊनविंशतौ, सम्बो० हे ऊनविंशते।

एवं विंशति[३] शब्दोऽपि।

(२३४) स्त्रीलिङ्गो नित्यैकवचनान्तः 'त्रिंशत्' शब्दः (३०)।

प्र० त्रिंशत्, द्वि० त्रिंशत्, तृ० त्रिंशता, च० त्रिंशते, पं० त्रिंशतः, ष० त्रिंशतः, स० त्रिंशति, सम्बो० हे त्रिंशत्।

(२३५) स्त्रीलिङ्गो नित्यैकवचनान्तः 'चत्वारिंशत्' शब्दः (४०)।

प्र० चत्वारिंशत्, द्वि० चत्वारिंशतम्, तृ० चत्वारिंशता, च० चत्वारिंशते, पं० चत्वारिंशतः ष० चत्वारिंशतः, स० चत्वारिंशति, सम्बो० हे चत्वारिंशत्।

(२३६) स्त्रीलिङ्गो नित्यैकवचनान्तः 'पञ्चाशत्' शब्दः (५०)।

प्र० पञ्चाशत्, द्वि० पञ्चाशतम्, तृ० पञ्चाशता, च० पञ्चाशते, पं० पञ्चाशतः, ष० पञ्चाशतः, स० पञ्चाशति, सम्बो० हे पञ्चाशत्।

---

१ 'अष्टन आ विभक्तौ' इत्यात्वे 'अष्टाभ्य औश्' इत्यौशि वृद्धिः।

२ आत्वाभावे 'पञ्चन्'शब्दवत् सर्वं कार्यम्।

३ विंशत्यादौ कृतैकशेषे तु द्विवचन-बहुवचनान्तोऽपि भवति। यथा विंशतिश्च विंशतिश्च इति विंशती। एवं विंशतिश्च विंशतिश्च विंशतिश्च इति विंशतयः। एवमन्यत्रापि ज्ञेयम्।

(२३७) स्त्रीलिङ्गो नित्यैकवचनान्तः 'षष्टि' शब्दः (६०) ।

प्र॰ षष्टिः, द्वि॰ षष्टिम्, तृ॰ षष्ट्या, च॰ षष्ट्यै-षष्टये, पं॰ षष्ट्याः-षष्टेः, ष॰ षष्ट्याः-षष्टेः, स॰ षष्ट्याम्-षष्टौ, सम्बो॰ हे षष्टे ।

(२३८) स्त्रीलिङ्गो नित्यैकवचनान्तः 'सप्तति' शब्दः (७०) ।

प्र॰ सप्ततिः, द्वि॰ सप्ततिम्, तृ॰ सप्तत्या, च॰ सप्तत्यै-सप्ततये, पं॰ सप्तत्याः-सप्ततेः, ष॰ सप्तत्याः-सप्ततेः, स॰ सप्तत्याम्-सप्ततौ, सम्बो॰ हे सप्तते ।

(२३९) स्त्रीलिङ्गो नित्यैकवचनान्तः 'अशीति' शब्दः (८०) ।

प्र॰ अशीतिः, द्वि॰ अशीतिम्, तृ॰ अशीत्या, च॰ अशीत्यै-अशीतये, पं॰ अशीत्याः-अशीतेः, ष॰ अशीत्याः-अशीतेः, स॰ अशीत्याम्-अशीतौ, सम्बो॰ हे अशीते ।

(२४०) स्त्रीलिङ्गो नित्यैकवचनान्तो 'नवति' शब्दः (९०) ।

प्र॰ नवतिः,[१] द्वि॰ नवतिम्, तृ॰ नवत्या, च॰ नवत्यै-नवतये, पं॰ नवत्याः-नवतेः, ष॰ नवत्याः-नवतेः, स॰ नवत्याम्-नवतौ, सम्बो॰ हे नवते ।

(२४१) नपुंसकलिङ्गो नित्यैकवचनान्तः 'शत' शब्दः (१००) ।

प्र॰ शतम्,[२] द्वि॰ शतम्, तृ॰ शतेन, च॰ शताय, पं॰ शतात्-द्, ष॰ शतस्य, स॰ शते, सम्बो॰ हे शत ।

एवम् अयुत-लक्ष-नियुतशब्दाः ज्ञानवत् । 'कोटि'शब्दः स्त्रीलिङ्गत्वात् 'रुचि'वत् ।

(२४२) संख्यानां गणनाक्रमः

| | | | |
|---|---|---|---|
| १ | एकः, एका, एकम् | १२ | द्वादश[३] |
| २ | द्वि, द्वे, द्वे | १३ | त्रयोदश[४] |
| ३ | त्रयः, तिस्रः, त्रीणि | १४ | चतुर्दश |
| ४ | चत्वारः, चतस्रः, चत्वारि | १५ | पञ्चदश |
| ५ | पञ्च | १६ | षोडश |
| ६ | षट् | १७ | सप्तदश |
| ७ | सप्त | १८ | अष्टादश[५] |
| ८ | अष्टौ-अष्ट | १९ | ऊनविंशतिः |
| ९ | नव | | एकोनविंशतिः |
| १० | दश | | एकान्नविंशतिः[६] |
| ११ | एकादश | | एकादूनविंशतिः |

१ इदमपि मतिवत् ।

२ ज्ञानवत् ।

३ 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः'—द्विशब्दस्य अष्टन्शब्दस्य च संख्यावाचके उत्तरपदे परे आत् स्यात्, न तु बहुव्रीहौ, अशीतिपरे चेत्यर्थः ।

४ 'त्रेस्त्रयः'— प्राक्शतात् संख्याशब्दे उत्तरपदे परतः त्रिशब्दस्य त्रयस् आदेशः स्यात् न तु बहुव्रीहौ अशीति-परे चेत्यर्थः । एवञ्च त्रयसादेशे रुत्वे उत्वे च गुणः ।

५ 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः'—द्विशब्दस्य अष्टन्शब्दस्य च संख्यावाचके उत्तरपदे परे आत् स्यात्, न तु बहुव्रीहौ अशीतिपरे चेत्यर्थः ।

६ एकेन न विंशति इति विग्रहः । 'एकादिश्चैकस्य चादुक्' इति नञः प्रकृतिभावे अदुगागमे च दीर्घे अनुनासिको

| | |
|---|---|
| २० | विंशतिः |
| २१ | एकविंशतिः |
| २२ | द्वाविंशतिः |
| २३ | त्रयोविंशतिः |
| २४ | चतुर्विंशतिः |
| २५ | पञ्चविंशतिः |
| २६ | षड्विंशतिः |
| २७ | सप्तविंशतिः |
| २८ | अष्टाविंशतिः |
| २९ | ऊनत्रिंशत्, एकोनत्रिंशत् |
| ३० | त्रिंशत् |
| ३१ | एकत्रिंशत् |
| ३२ | द्वात्रिंशत् |
| ३३ | त्रयस्त्रिंशत् |
| ३४ | चतुस्त्रिंशत् |
| ३५ | पञ्चत्रिंशत् |
| ३६ | षट्त्रिंशत् |
| ३७ | सप्तत्रिंशत् |
| ३८ | अष्टात्रिंशत् |
| ३९ | ऊनचत्वारिंशत्, एकोनचत्वारिंशत्, नवत्रिंशत् |
| ४० | चत्वारिंशत् |
| ४१ | एकचत्वारिंशत् |
| ४२ | द्वाचत्वारिंशत्,[1] द्विचत्वारिंशत् |
| ४३ | त्रयश्चत्वारिंशत्,[2] त्रिचत्वारिंशत् |
| ४४ | चतुश्चत्वारिंशत् |
| ४५ | पञ्चचत्वारिंशत् |
| ४६ | षट्चत्वारिंशत् |
| ४७ | सप्तचत्वारिंशत् |
| ४८ | अष्टाचत्वारिंशत्,[3] अष्टचत्वारिंशत् |
| ४९ | ऊनपञ्चाशत्, एकोनपञ्चाशत्, नवचत्वारिंशत् |
| ५० | पञ्चाशत् |
| ५१ | एकपञ्चाशत् |
| ५२ | द्विपञ्चाशत्, द्वापञ्चाशत् |
| ५३ | त्रयःपञ्चाशत्, त्रिपञ्चाशत् |
| ५४ | चतुःपञ्चाशत् |
| ५५ | पञ्चपञ्चाशत् |
| ५६ | षट्पञ्चाशत् |
| ५७ | सप्तपञ्चाशत् |
| ५८ | अष्टापञ्चाशत्, अष्टपञ्चाशत् |
| ५९ | नवपञ्चाशत्, ऊनषष्टिः, एकोनषष्टिः |
| ६० | षष्टिः |
| ६१ | एकषष्टिः |
| ६२ | द्विषष्टिः, द्वाषष्टिः |
| ६३ | त्रयःषष्टिः, त्रिषष्टिः |
| ६४ | चतुःषष्टिः |
| ६५ | पञ्चषष्टिः |
| ६६ | षट्षष्टिः |
| ६७ | सप्तषष्टिः |
| ६८ | अष्टाषष्टिः, अष्टषष्टिः |
| ६९ | नवषष्टिः, ऊनसप्ततिः, एकोनसप्ततिः |
| ७० | सप्ततिः |
| ७१ | एकसप्ततिः |
| ७२ | द्विसप्ततिः, द्वासप्ततिः |
| ७३ | त्रयःसप्ततिः, त्रिसप्ततिः |

विकल्पः।

१ 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्'—द्वि-अष्टनः त्रेश्च प्रागुक्तं (द्वि-अष्टनोरात्वं त्रिशब्दस्य त्रयसादेशश्च) वा स्यात् चत्वारिंशदादौ परे इत्यर्थः।

२ 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्'—द्वि-अष्टनः त्रेश्च प्रागुक्तं (द्वि-अष्टनोरात्वं त्रिशब्दस्य त्रयसादेशश्च) वा स्यात् चत्वारिंशदादौ परे इत्यर्थः।

३ 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्'—द्वि-अष्टनः त्रेश्च प्रागुक्तं (द्वि-अष्टनोरात्वं त्रिशब्दस्य त्रयसादेशश्च) वा स्यात् चत्वारिंशदादौ परे इत्यर्थः।

७४ चतुःसप्ततिः

७५ पञ्चसप्ततिः

७६ षट्सप्ततिः

७७ सप्तसप्ततिः

७८ अष्टासप्ततिः,
अष्टसप्ततिः

७९ नवसप्ततिः,
ऊनाशीतिः,
एकोनाशीतिः

८० अशीतिः

८१ एकाशीतिः

८२ द्व्यशीतिः[1]

८३ त्र्यशीतिः[2]

८४ चतुरशीतिः

८५ पञ्चाशीतिः

८६ षडशीतिः

८७ सप्ताशीतिः

८८ अष्टाशीतिः[3]

८९ नवाशीतिः,
ऊननवतिः,
एकोननवतिः

९० नवतिः

९१ एकनवतिः

९२ द्वानवतिः, द्विनवतिः

९३ त्रयोनवतिः, त्रिनवतिः

९४ चतुर्णवतिः

९५ पञ्चनवतिः

९६ षण्णवतिः

९७ सप्तनवतिः

९८ अष्टानवतिः,
अष्टनवतिः

९९ नवनवतिः,
ऊनशतम्,
एकोनशतम्

१०० शतम्

१०१ एकशतम्[4]

१०२ द्विशतम्[5]

१०३ त्रिशतम्[6]

संख्यायाः कुत्र विश्राम इत्याह—

एकं दश शतञ्चैव सहस्रमयुतं तथा।
लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेव च॥
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः।
अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथाक्रमम्॥

१ 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इति सूत्रे 'त्रेस्त्रयः' इति सूत्रे च न तु अशीतावित्युक्तत्वात् द्व्यष्टनशब्दयोरात्वं, त्रिशब्दस्य त्रयसादेशश्चात्र न भवतीत्यवधेयम्।

२ 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इति सूत्रे 'त्रेस्त्रयः' इति सूत्रे च न तु अशीतावित्युक्तत्वात् द्व्यष्टनशब्दयोरात्वं, त्रिशब्दस्य त्रयसादेशश्चात्र न भवतीत्यवधेयम्।

३ 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इति सूत्रे 'त्रेस्त्रयः' इति सूत्रे च न तु अशीतावित्युक्तत्वात् द्व्यष्टनशब्दयोरात्वं, त्रिशब्दस्य त्रयसादेशश्चात्र न भवतीत्यवधेयम्।

४ एकञ्च शतञ्चेति समाहारद्वन्द्वः।

५ द्वौ च शतञ्च त्रीणि च शतञ्च इति समाहारद्वन्द्वः। 'द्व्यष्टनः' इति सूत्रे 'त्रेस्त्रयः' इति सूत्रे च 'प्राक् शताद् इति वक्तव्यम्' (वा.) इत्युक्तत्वात् शतशब्दे परे द्विशब्दस्य आत्वं, त्रिशब्दस्य त्रयसादेशो न भवतीति। कर्मधारये तु 'द्विशतम्' इत्यस्य २००, त्रिशतम् इत्यस्य ३०० इत्यर्थो भवति।

६ द्वौ च शतञ्च त्रीणि च शतञ्च इति समाहारद्वन्द्वः। 'द्व्यष्टनः' इति सूत्रे 'त्रेस्त्रयः' इति सूत्रे च 'प्राक् शताद् इति वक्तव्यम्' (वा.) इत्युक्तत्वात् शतशब्दे परे द्विशब्दस्य आत्वं, त्रिशब्दस्य त्रयसादेशो न भवतीति। कर्मधारये तु 'द्विशतम्' इत्यस्य २००, त्रिशतम् इत्यस्य ३०० इत्यर्थो भवति।

| | |
|---|---|
| एकम् = ईकाई | १ |
| दश = दहाई | १० |
| शतम् = सैकड़ा | १०० |
| सहस्रम् = हजार | १००० |
| दशसहस्रम् = | १०००० |
| लक्षम् = लाख | १००००० |
| दशलक्षम् = दश लाख | १०००००० |
| कोटिः = करोड़ | १००००००० |
| दशकोटिः = दश करोड़ | १०००००००० |
| अर्बुदम् = अरब | १००००००००० |
| दशार्बुदम् = दश अरब | १०००००००००० |
| खर्वः = खरब | १००००००००००० |
| दशखर्वः = दश खरब | १०००००००००००० |
| नीलम् = नील | १००००००००००००० |
| दशनीलम् = दश नील | १०००००००००००००० |
| पद्मम् = पदुम | १००००००००००००००० |
| दशपद्मम् = दश पदुम् | १०००००००००००००००० |
| शङ्खः = शंख | १००००००००००००००००० |
| दशशङ्खः = दश शंख | १०००००००००००००००००० |
| महाशङ्खः = महाशंख | १००००००००००००००००००० |

(२४३) **पूरणवाचकसंख्याशब्दानां गणनाक्रमः**

१ प्रथम
२ द्वितीय
३ तृतीय
४ चतुर्थ
५ पञ्चम
६ षष्ठ
७ सप्तम
८ अष्टम
९ नवम
१० दशम
११ एकादश
१२ द्वादश
१३ त्रयोदश
१४ चतुर्दश
१५ पञ्चदश
१६ षोडश
१७ सप्तदश
१८ अष्टादश
१९ नवदश, एकोनविंश, एकोनविंशतितम
२० विंश, विंशतितम
२१ एकविंश, एकविंशतितम
२२ द्वाविंश, द्वाविंशतितम
२३ त्रयोविंश, त्रयोविंशतितम
२४ चतुर्विंश, चतुर्विंशतितम
२५ पञ्चविंश, पञ्चविंशतितम
२६ षड्विंश, षड्विंशतितम
२७ सप्तविंश, सप्तविंशतितम
२८ अष्टाविंश, अष्टाविंशतितम
२९ नवविंश, नवविंशतितम
एकोनत्रिंश, एकोनत्रिंशत्तम
३० त्रिंश, त्रिंशत्तम
३१ एकत्रिंश, एकत्रिंशत्तम
३२ द्वात्रिंश, द्वात्रिंशत्तम
३३ त्रयस्त्रिंश, त्रयस्त्रिंशत्तम
३४ चतुस्त्रिंश, चतुस्त्रिंशत्तम
३५ पञ्चत्रिंश, पञ्चत्रिंशत्तम

३६ षट्त्रिंश, षट्त्रिंशत्तम
३७ सप्तत्रिंश, सप्तत्रिंशत्तम
३८ अष्टात्रिंश, अष्टात्रिंशत्तम
३९ नवत्रिंश, नवत्रिंशत्तम,
एकोनचत्वारिंश, एकोनचत्वारिंशत्तम
४० चत्वारिंश, चत्वारिंशत्तम
४१ एकचत्वारिंश, एकचत्वारिंशत्तम
४२ द्वाचत्वारिंश, द्वाचत्वारिंशत्तम
४३ त्रयश्चत्वारिंश, त्रयश्चत्वारिंशत्तम,
त्रिचत्वारिंश, त्रिचत्वारिंशत्तम
४४ चतुश्चत्वारिंश, चतुश्चत्वारिंशत्तम
४५ पञ्चचत्वारिंश, पञ्चचत्वारिंशत्तम
४६ षट्चत्वारिंश, षट्चत्वारिंशत्तम
४७ सप्तचत्वारिंश, सप्तचत्वारिंशत्तम
४८ अष्टाचत्वारिंश, अष्टाचत्वारिंशत्तम,
अष्टचत्वारिंश, अष्टचत्वारिंशत्तम
४९ नवचत्वारिंश, नवचत्वारिंशत्तम,
एकोनपञ्चाश, एकोनपञ्चाशत्तम
५० पञ्चाश, पञ्चाशत्तम
५१ एकपञ्चाश, एकपञ्चाशत्तम
५२ द्वापञ्चाश, द्विपञ्चाशत्तम
५३ त्रयःपञ्चाश, त्रयःपञ्चाशत्तम
५४ चतुःपञ्चाश, चतुःपञ्चाशत्तम
५५ पञ्चपञ्चाश, पञ्चपञ्चाशत्तम
५६ षट्पञ्चाश, षट्पञ्चाशत्तम
५७ सप्तपञ्चाश, सप्तपञ्चाशत्तम
५८ अष्टापञ्चाश, अष्टापञ्चाशत्तम,
अष्टपञ्चाश, अष्टपञ्चाशत्तम
५९ नवपञ्चाश, नवपञ्चाशत्तम,
एकोनपञ्चाश, एकोनपञ्चाशत्तम
६० षष्ट, षष्टितम
६१ एकषष्ट, एकषष्टितम
६२ द्वाषष्ट, द्वाषष्टितम
६३ त्रयःषष्ट, त्रयःषष्टितम
६४ चतुःषष्ट, चतुःषष्टितम
६५ पञ्चषष्ट, पञ्चषष्टितम
६६ षट्षष्ट, षट्षष्टितम
६७ सप्तषष्ट, सप्तषष्टितम
६८ अष्टाषष्ट, अष्टाषष्टितम, अष्टषष्ट, अष्टषष्टितम
६९ नवषष्ट, नवषष्टितम, एकोनसप्तत,
एकोनसप्ततितम
७० सप्तत, सप्ततितम
७१ एकसप्तत, एकसप्ततितम
७२ द्वासप्तत, द्वासप्ततितम,
द्विसप्तत, द्विसप्ततितम
७३ त्रयःसप्तत, त्रिसप्ततितम
७४ चतुःसप्तत, चतुस्सप्ततितम
७५ पञ्चसप्तत, पञ्चसप्ततितम
७६ षट्सप्तत, षट्सप्ततितम
७७ सप्तसप्तत, सप्तसप्ततितम
७८ अष्टासप्तत, अष्टासप्ततितम, अष्टसप्तत,
अष्टसप्ततितम
७९ नवसप्तत, नवसप्ततितम, एकोनाशीत,
एकोनाशीतितम
८० अशीत, अशीतितम
८१ एकाशीत, एकाशीतितम
८२ द्व्यशीत, द्व्यशीतितम
८३ त्र्यशीत, त्र्यशीतितम
८४ चतुरशीत, चतुरशीतितम
८५ पञ्चाशीत, पञ्चाशीतितम
८६ षडशीत, षडशीतितम
८७ सप्ताशीत, सप्ताशीतितम
८८ अष्टाशीत, अष्टाशीतितम
८९ नवाशीत, नवाशीतितम, एकोननवत,
एकोननवतितम
९० नवत, नवतितम
९१ एकनवत, एकनवतितम
९२ द्वानवत, द्वानवतितम, द्विनवत, द्विनवतितम
९३ त्रयोनवत, त्रयोनवतितम,
त्रिनवत, त्रिनवतितम
९४ चतुर्नवत, चतुर्नवतितम
९५ पञ्चनवत, पञ्चनवतितम
९६ षण्णवत, षण्णवतितम
९७ सप्तनवत, सप्तनवतितम
९८ अष्टानवत, अष्टानवतितम, अष्टनवत
९९ नवनवत, नवनवतितम, एकोनशततम
१०० शततम

नोट-- उपर्युक्त पूरणवाची संख्या शब्दों के मूलरूप ही दिये गये हैं। इनके पुल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग के रूप आवश्यकतानुसार बना लेना चाहिए।

(२४४) धकारान्तः पुल्लिङ्गो 'बुध्' शब्दः (समझदार)

| | | | | |
|---|---|---|---|---|
| प्र॰ | भुत्-भुद्[१] | बुधौ[२] | बुधः | कर्त्ता |
| द्वि॰ | बुधम् | बुधौ | बुधः | कर्म |
| तृ॰ | बुधा | भुद्भ्याम्[३] | भुद्भिः | करण |
| च॰ | बुधे | भुद्भ्याम् | भुद्भ्यः | सम्प्र॰ |
| पं॰ | बुधः | भुद्भ्याम् | भुद्भ्यः | अपा॰ |
| ष॰ | बुधः | बुधोः | बुधाम् | सम्ब॰ |
| स॰ | बुधि | बुधोः | भुत्सु | अधि॰ |
| | हे भुत्-द् | हे बुधौ | हे बुधः | सम्बो॰ |

(२४५) जकारान्तः पुल्लिङ्गो 'युज्' शब्दः (योगी)

| | | | | |
|---|---|---|---|---|
| प्र॰ | युङ् | युञ्जौ | युञ्जः | कर्त्ता |
| द्वि॰ | युञ्जम् | युञ्जौ | युजः | कर्म |
| तृ॰ | युजा | युग्भ्याम् | युग्भिः | करण |
| च॰ | युजे | युग्भ्याम् | युग्भ्यः | सम्प्र॰ |
| पं॰ | युजः | युग्भ्याम् | युग्भ्यः | अपा॰ |
| ष॰ | युजः | युजोः | युजाम् | सम्ब॰ |
| स॰ | युजि | युजोः | युक्षु | अधि॰ |
| | हे युङ् | हे युञ्जौ | हे युञ्जः | सम्बो॰ |

(२४६) जकारान्तः पुल्लिङ्गो 'विश्वसृज्' शब्दः (ब्रह्मा)

| | | | | |
|---|---|---|---|---|
| प्र॰ | विश्वसृट्-ड्[४] | विश्वसृजौ | विश्वसृजः | कर्त्ता |
| द्वि॰ | विश्वसृजम् | विश्वसृजौ | विश्वसृजः | कर्म |
| तृ॰ | विश्वसृजा | विश्वसृड्भ्याम् | विश्वसृड्भिः | करण |
| च॰ | विश्वसृजे | विश्वसृड्भ्याम् | विश्वसृड्भ्यः | सम्प्र॰ |
| पं॰ | विश्वसृजः | विश्वसृड्भ्याम् | विश्वसृड्भ्यः | अपा॰ |
| ष॰ | विश्वसृजः | विश्वसृजोः | विश्वसृजाम् | सम्ब॰ |
| स॰ | विश्वसृजि | विश्वसृजोः | विश्वसृट्त्सु विश्वसृट्सु | अधि॰ |
| | हे विश्वसृट्-ड् | हे विश्वसृजौ | हे विश्वसृजः | सम्बो॰ |

१ बुध्यते इति भुत्। 'बुध अवगमने' तस्मात् कर्तरि क्विप्। 'एकाचो बश॰' इति बकारस्य भष्भावे जश्त्वचर्त्वयोः सुलोपः।

२ पदान्तत्वाभावात् न भष्भावः।

३ भ्यामादौ हलि 'स्वादिष्वि'ति पदत्वात् भष्भावे जश्त्वम्।

४ विश्वं सृजतीति विश्वसृट्। सृज विसर्गे अस्मात् क्विप्। षत्वादिकार्यं राजवत्।

(२४७) जकारान्तः पुल्लिङ्गो 'देवेज्' शब्दः (पुजारी)

| | | | | |
|---|---|---|---|---|
| प्र० | देवेट्-ड्[१] | देवेजौ | देवेजः | कर्त्ता |
| द्वि० | देवेजम् | देवेजौ | देवेजः | कर्म |
| तृ० | देवेजा | देवेड्भ्याम् | देवेड्भिः | करण |
| च० | देवेजे | देवेड्भ्याम् | देवेड्भ्यः | सम्प्र० |
| पं० | देवेजः | देवेड्भ्याम् | देवेड्भ्यः | अपा० |
| ष० | देवेजः | देवेजोः | देवेजाम् | सम्ब० |
| स० | देवेजि | देवेजोः | देवेट्त्सु<br>देवेट्सु | अधि० |
| | हे देवेट्-ड् | हे देवेजौ | हे देवेजः | सम्बो० |

(२४८) जान्तः पुल्लिङ्गो 'विभ्राज्' शब्दः (क्षत्रिय, सर्वव्यापी पुरुष—परमेश्वर)

| | | | | |
|---|---|---|---|---|
| प्र० | विभ्राट्-ड्[२] | विभ्राजौ | विभ्राजः | कर्त्ता |
| द्वि० | विभ्राजम् | विभ्राजौ | विभ्राजः | कर्म |
| तृ० | विभ्राजा | विभ्राड्भ्याम् | विभ्राड्भिः | करण |
| च० | विभ्राजे | विभ्राड्भ्याम् | विभ्राड्भ्यः | सम्प्र० |
| पं० | विभ्राजः | विभ्राड्भ्याम् | विभ्राड्भ्यः | अपा० |
| ष० | विभ्राजः | विभ्राजोः | विभ्राजाम् | सम्ब० |
| स० | विभ्राजि | विभ्राजोः | विभ्राट्त्सु<br>विभाट्सु | अधि० |
| | हे विभ्राट्-ड् | हे विभ्राजौ | हे विभ्राजः | सम्बो० |

(२४९) जान्तः पुल्लिङ्गः 'खञ्ज्' शब्दः (लँगड़ा)

| | | | | |
|---|---|---|---|---|
| प्र० | खन्[३] | खञ्जौ[४] | खञ्जः | कर्त्ता |
| द्वि० | खञ्जम् | खञ्जौ | खञ्जः | कर्म |
| तृ० | खञ्जा | खन्भ्याम्[५] | खन्भिः | करण |
| च० | खञ्जे | खन्भ्याम् | खन्भ्यः | सम्प्र० |
| पं० | खञ्जः | खन्भ्याम् | खन्भ्यः | अपा० |
| ष० | खञ्जः | खञ्जोः | खञ्जाम् | सम्ब० |
| स० | खञ्जि | खञ्जोः | खन्त्सु-खन्सु[६] | अधि० |

१ देवान् यजतीति देवेट्। क्विपि यजादित्वात् 'वचिस्वपी'ति सम्प्रसारणे 'आद्गुणः' षत्वादिकार्यन्तु राजवत्।

२ विशेषेण भ्राजते इति विभ्राट्। 'टुभ्राजृ दीप्तौ' फणादीयम्, तेन क्विपि सुलोपे च सति 'व्रश्चे'ति सूत्रे राजिसाहचर्यात् फणादेरेव भ्राजतेर्ग्रहणात् षत्वम्। शेषं तु राजवत्। फणादिव्यतिरिक्तानान्तु कुत्वं स्यादेव, अत एवोक्तं परममूले—विभ्राक् विभ्राग् इति।

३ खञ्जतीति खन्। 'खजि गतिवैकल्ये' अस्मात् क्विप्। इदित्वान्नुम्। अनुस्वारपरसवर्णौ सुलोपे सति संयोगान्तलोपे निमित्ताऽपायात् अनुस्वारपरसवर्णयोर्निवृत्तिः।

४ अजादौ पदत्वाभावात् संयोगान्तलोपो न।

५ भ्यामादौ हलि 'स्वादिष्वि'ति पदत्वात् संयोगान्तलोपः।

६ 'नश्चे'ति विभाषया तुगिति विशेषः।

| | हे खन् | हे खञ्जौ | हे खञ्जः | सम्बो. |
|---|---|---|---|---|

(२५०) जान्तः पुल्लिङ्गः 'सुयुज्' शब्दः (सुयोगी)

| | | | | |
|---|---|---|---|---|
| प्र. | सुयुक्-[1]ग् | सुयुजौ | सुयुजः | कर्त्ता |
| द्वि. | सुयुजम् | सुयुजौ | सुयुजः | कर्म |
| तृ. | सुयुजा | सुयुग्भ्याम् | सुयुग्भिः | करण |
| च. | सुयुजे | सुयुग्भ्याम् | सुयुग्भ्यः | सम्प्र. |
| पं. | सुयुजः | सुयुग्भ्याम् | सुयुग्भ्यः | अपा. |
| ष. | सुयुजः | सुयुजोः | सुयुजाम् | सम्ब. |
| स. | सुयुजि | सुयुजोः | सुयुक्षु | अधि. |
| | हे सुयुक्-ग् | हे सुयुजौ | हे सुयुजः | सम्बो. |

(२५१) जान्तः पुल्लिङ्गो 'राज्' शब्दः (राजा)

| | | | | |
|---|---|---|---|---|
| प्र. | राट्-[2]ड् | राजौ | राजः | कर्त्ता |
| द्वि. | राजम् | राजौ | राजः | कर्म |
| तृ. | राजा | राड्भ्याम्[3] | राड्भिः | करण |
| च. | राजे | राड्भ्याम् | राड्भ्यः | सम्प्र. |
| पं. | राजः | राड्भ्याम् | राड्भ्यः | अपा. |
| ष. | राजः | राजोः | राजाम् | सम्ब. |
| स. | राजि | राजोः | राट्त्सु, राट्सु | अधि. |
| | हे राट्-ड् | हे राजौ | हे राजः | सम्बो. |

(२५२) जान्तः पुल्लिङ्गः 'परिव्राज्' शब्दः (यति, संन्यासी)

| | | | | |
|---|---|---|---|---|
| प्र. | परिव्राट्-[4]ड् | परिव्राजौ | परिव्राजः | कर्त्ता |
| द्वि. | परिव्राजम् | परिव्राजौ | परिव्राजः | कर्म |
| तृ. | परिव्राजा | परिव्राड्भ्याम्[5] | परिव्राड्भिः | करण |
| च. | परिव्राजे | परिव्राड्भ्याम् | परिव्राड्भ्यः | सम्प्र. |
| पं. | परिव्राजः | परिव्राड्भ्याम् | परिव्राड्भ्यः | अपा. |
| ष. | परिव्राजः | परिव्राजोः | परिव्राजाम् | सम्ब. |
| स. | परिव्राजि | परिव्राजोः | परिव्राट्त्सु[6] परिव्राट्सु | अधि. |
| | हे परिव्राट्-ड् | हे परिव्राजौ | हे परिव्राजः | सम्बो. |

१ सुष्ठु युनक्तीति सुयुक्। 'सत्सूद्विषे'ति क्विप्। असमासे इत्युक्तत्वान्न नुम्।

२ राजते इति राट्। 'राजृ दीप्तौ' अस्मात् क्विप् हल्ङ्यादिना सुलोपे 'व्रश्चे'ति षत्वे जश्त्वचर्त्वे।

३ भ्यामादौ हलि पदत्वात् षत्वं जश्त्वञ्च।

४ सर्वं परित्यज्य व्रजतीति परिव्राट्। 'परौ व्रजेः षः पदान्ते' इत्युणादिसूत्रेण परावुपपदे व्रजेः क्विप् दीर्घः पदान्ते षत्वं च निपात्यते, ततः सौ हल्परत्वात्तस्य लोपे जश्त्वचर्त्वे।

५ भ्यामादौ हलि पदत्वात् षत्वे जश्त्वम्।

६ 'ड्ः सि धुट्' इति वा धुडिति विशेषः।

(२५३) जकारान्तः पुल्लिङ्गः 'परिभृज्' शब्दः (सफा करने वाला )

| | | | | |
|---|---|---|---|---|
| प्र० | परिभृट्-[१]ड् | परिभृजौ | परिभृजः | कर्त्ता |
| द्वि० | परिभृजम् | परिभृजौ | परिभृजः | कर्म |
| तृ० | परिभृजा | परिभृड्भ्याम् | परिभृड्भिः | करण |
| च० | परिभृजे | परिभृड्भ्याम् | परिभृड्भ्यः | सम्प्र० |
| पं० | परिभृजः | परिभृड्भ्याम् | परिभृड्भ्यः | अपा० |
| ष० | परिभृजः | परिभृजोः | परिभृजाम् | सम्ब० |
| स० | परिभृजि | परिभृजोः | परिभृट्त्सु<br>परिभृट्सु | अधि० |
| | हे परिभृट्-ड् | हे परिभृजौ | हे परिभृजः | सम्बो० |

(२५४) जान्तः पुल्लिङ्गो 'विश्वराज्' शब्दः (भगवान्)

| | | | | |
|---|---|---|---|---|
| प्र० | विश्वाराट्-[२]ड् | विश्वराजौ | विश्वराजः | कर्त्ता |
| द्वि० | विश्वराजम् | विश्वराजौ | विश्वराजः | कर्म |
| तृ० | विश्वराजा | विश्वाराड्भ्याम् | विश्वाराड्भिः | करण |
| च० | विश्वराजे | विश्वाराड्भ्याम् | विश्वाराड्भ्यः | सम्प्र० |
| पं० | विश्वराजः | विश्वाराड्भ्याम् | विश्वाराड्भ्यः | अपा० |
| ष० | विश्वराजः | विश्वराजोः | विश्वराजाम् | सम्ब० |
| स० | विश्वराजि | विश्वराजोः | विश्वराट्त्सु[३]<br>विश्वराट्सु | अधि० |
| | हे विश्वाराट्-ड् | हे विश्वराजौ | हे विश्वराजः | सम्बो० |

(२५५) जान्तः पुल्लिङ्गो 'भृस्ज्' शब्दः (भूजा भूजने वाला)

| | | | | |
|---|---|---|---|---|
| प्र० | भृट्-[४]ड् | भृस्जौ[५] | भृस्जः | कर्त्ता |
| द्वि० | भृज्जम् | भृस्जौ | भृस्जः | कर्म |
| तृ० | भृज्जा | भृड्भ्याम्[६] | भृड्भिः | करण |
| च० | भृज्जे | भृड्भ्याम् | भृड्भ्यः | सम्प्र० |
| पं० | भृज्जः | भृड्भ्याम् | भृड्भ्यः | अपा० |
| ष० | भृज्जः | भृज्जोः | भृज्जाम् | सम्ब० |

१ परिमार्ष्टीति परिमृट्। 'मृजू शुद्धौ' अस्मात् क्विप्। 'क्ङिति चे'ति निषेधात् 'मृजेर्वृद्धिः' इति वृद्धिर्न भवति। षत्वादिकार्यञ्च राजवत्।

२ विश्वस्मिन् राजते इति विभ्राट्। 'सत्सूद्विषे'ति क्विपि उपपदसमासे 'विश्वराज्'शब्दः। तस्मात् सौ हल्परत्वात्तस्य लोपे 'व्रश्चे' ति षत्वे जश्त्वे चर्त्वे च 'विश्वस्य वसुराटोः' इति दीर्घः। 'राट्' इति चर्त्वनिर्देशस्य पदान्तत्वोपलक्षणत्वात् जश्त्वपक्षेऽपि दीर्घः।

३ 'ङः सि धुट्' इति विशेषः।

४ भृज्जतीति भृट्। 'भ्रस्ज पाके' अस्मात् क्विपि 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'भृस्ज्'शब्दः। तस्मात् स्वादिकार्यं रूपम्।

५ निमित्ताभावात् 'स्कोरि'त्यस्याप्राप्त्या 'झलां जश् झशि' इति प्रबाध्य जश्त्वम्।

६ भ्यामादौ हलि तु पदत्वात्सलोपे षत्वे जश्त्वम्।

| | | | | |
|---|---|---|---|---|
| स॰ | भृज्जि | भृज्जोः | भृट्त्सु-भृट्सु | अधि॰ |
| | हे भृट्-ड् | हे भृज्जौ | हे भृज्जः | सम्बो॰ |

(२५६) जान्तः पुल्लिङ्ग 'ऊर्ज्' शब्दः (बलवान्)

| | | | | |
|---|---|---|---|---|
| प्र॰ | ऊर्क-[१]ग् | ऊर्जौ | ऊर्जः | कर्त्ता |
| द्वि॰ | ऊर्जम् | ऊर्जौ | ऊर्जः | कर्म |
| तृ॰ | ऊर्जा | ऊर्ग्भ्याम् | ऊर्ग्भिः | करण |
| च॰ | ऊर्जे | ऊर्ग्भ्याम् | ऊर्ग्भ्यः | सम्प्र॰ |
| पं॰ | ऊर्जः | ऊर्ग्भ्याम् | ऊर्ग्भ्यः | अपा॰ |
| ष॰ | ऊर्जः | ऊर्जोः | ऊर्जाम् | सम्ब॰ |
| स॰ | ऊर्जि | ऊर्जोः | ऊर्क्षु | अधि॰ |
| | हे ऊर्क-ग् | हे ऊर्जौ | हे ऊर्जः | सम्बो॰ |

(२५७) जान्तः पुल्लिङ्गः 'ऋत्विज्' शब्दः (पुरोहित)

| | | | | |
|---|---|---|---|---|
| प्र॰ | ऋत्विक्-[२]ग् | ऋत्विजौ | ऋत्विजः | कर्त्ता |
| द्वि॰ | ऋत्विजम् | ऋत्विजौ | ऋत्विजः | कर्म |
| तृ॰ | ऋत्विजा | ऋत्विग्भ्याम् | ऋत्विग्भिः | करण |
| च॰ | ऋत्विजे | ऋत्विग्भ्याम् | ऋत्विग्भ्यः | सम्प्र॰ |
| पं॰ | ऋत्विजः | ऋत्विग्भ्याम् | ऋत्विग्भ्यः | अपा॰ |
| ष॰ | ऋत्विजः | ऋत्विजोः | ऋत्विजाम् | सम्ब॰ |
| स॰ | ऋत्विजि | ऋत्विजोः | ऋत्विक्षु[३] | अधि॰ |
| | हे ऋत्विक्-ग् | हे ऋत्विजौ | हे ऋत्विजः | सम्बो॰ |

एवं बलिभुज् (काक), हुतभुज् (अग्नि), भृतिभुज् (भृत्य), भूभुज् (राजा), भिषज् (वैद्य) शब्दादयो बोध्याः।

(२५८) दकारान्तः पुल्लिङ्गः सर्वनाम 'त्यद्' शब्दः (वह)

| | | | | |
|---|---|---|---|---|
| प्र॰ | स्यः[४] | त्यौ[५] | त्ये[६] | कर्त्ता |
| द्वि॰ | त्यम् | त्यौ | त्यान् | कर्म |
| तृ॰ | त्येन | त्याभ्याम् | त्यैः | करण |

१ 'ऊर्ज बलप्राणनयोः' अस्मात् चुरादिण्यन्तात् 'भ्राजभासे'त्यादिसूत्रेण क्विपि णिलोपे 'ऊर्ज्'शब्दः। तस्मात् सौ, तस्य हल्परकत्वात् लोपे 'चोः कुः' इति कुत्वे चर्त्वम्।

२ 'ऋ गतौ' अस्मात् 'औणादिकसूत्रेण तुः। ऋतुः=गमनं, प्राप्तिः, दक्षिणाद्रव्यलाभो विवक्षितः। तस्मिन् निमित्ते यजन्ति=यज्ञव्यापारं कुर्वन्तीत्यर्थे ऋतावुपपदे यज्धातोः क्विनि 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे यणि ऋत्विज्शब्दः। तस्मात् स्वादिकार्ये रूपम्।

३ सुपि तु खर्परत्वेन चर्त्वे 'आदेशप्रत्यययोः' इति षत्वमिति विशेषः।

४ 'त्यदादीनामः' इत्यत्वे पररूपे 'तदोः सः सावनन्त्ययोः' इति सत्वे रुत्वविसर्गौ।

५ अत्वे पररूपे वृद्धिः सत्वन्तु न सूत्रे सावित्युक्तेः।

६ 'जसः शी' इति सर्वनामप्रयुक्तकार्यं सर्वशब्दवद् एवमन्यत्रापि ज्ञेयम्।

| | | | | |
|---|---|---|---|---|
| च० | त्यस्मै | त्याभ्याम् | त्येभ्यः | सम्प्र० |
| पं० | त्यस्मात्-द् | त्याभ्याम् | त्येभ्यः | अपा० |
| ष० | त्यस्य | त्ययोः | त्येषाम् | सम्ब० |
| स० | त्यस्मिन् | त्ययोः | त्येषु | अधि० |

(त्यदादेः सम्बोधनं नास्ति)

(२५९) दकारान्तः पुल्लिङ्गः सर्वनाम 'तद्' शब्दः (वह)

| | | | | |
|---|---|---|---|---|
| प्र० | सः[1] | तौ | ते | कर्त्ता |
| द्वि० | तम् | तौ | तान् | कर्म |
| तृ० | तेन | ताभ्याम् | तैः | करण |
| च० | तस्मै | ताभ्याम् | तेभ्यः | सम्प्र० |
| पं० | तस्मात्-द् | ताभ्याम् | तेभ्यः | अपा० |
| ष० | तस्य | तयोः | तेषाम् | सम्ब० |
| स० | तस्मिन् | तयोः | तेषु | अधि० |

एवं परमसः[2] परमतौ परमते इत्यादि।

(२६०) दकारान्तः पुल्लिङ्गः सर्वनाम 'यद्' शब्दः (जो)

| | | | | |
|---|---|---|---|---|
| प्र० | यः | यौ | ये | कर्त्ता |
| द्वि० | यम् | यौ | यान् | कर्म |
| तृ० | येन | याभ्याम् | यैः | करण |
| च० | यस्मै | याभ्याम् | येभ्यः | सम्प्र० |
| पं० | यस्मात्-द् | याभ्याम् | येभ्यः | अपा० |
| ष० | यस्य | ययोः | येषाम् | सम्ब० |
| स० | यस्मिन् | ययोः | येषु | अधि० |

(२६१) दकारान्तः पुल्लिङ्गः सर्वनाम 'एतद्' शब्दः (यह—अतिशय समीप में)

| | | | | |
|---|---|---|---|---|
| प्र० | एषः[3] | एतौ | एते | कर्त्ता |
| द्वि० | एतम्-एनम् | एतौ-एनौ | एतान्-एनान् | कर्म |
| तृ० | एतेन एनेन | एताभ्याम् | एतैः | करण |
| च० | एतस्मै | एताभ्याम् | एतेभ्यः | सम्प्र० |
| पं० | एतस्मात्-द् | एताभ्याम् | एतेभ्यः | अपा० |
| ष० | एतस्य | एतयोः-एनयोः | एतेषाम् | सम्ब० |
| स० | एतस्मिन् | एतयोः-एनयोः | एतेषु | अधि० |

१ 'त्यद्'शब्दवत् कार्यं ज्ञेयम्।

२ आत्वादीनामाऽऽङ्गत्वात् 'पदाङ्गाधिकारे' इति परिभाषया तदन्तेऽपि प्रवृत्त्या 'त्यत्'शब्दवत् कार्य बोध्यम्।

३ अत्वे पररूपे 'तदोः सः' इति सत्वे षत्वम्, अन्यत् कार्यं 'सर्व'शब्दवत्। केवलमन्वादेशे 'द्वितीयाटौस्स्वेनः' इति विशेषः।

**(२६२) त्रिषु लिङ्गेषु समानः सर्वनाम 'युष्मद्' शब्दः (तू, तुम)**

| | | | | |
|---|---|---|---|---|
| प्र० | त्वम्[१] | युवाम्[२] | यूयम्[३] | कर्त्ता |
| द्वि० | त्वाम्[४] | युवाम् | युष्मान्[५] | कर्म |
| | (त्वा) | (वाम्) | (वः) | |
| तृ० | त्वया[६] | युवाभ्याम्[७] | युष्माभिः | करण |
| च० | तुभ्यम्[८] | युवाभ्याम् | युष्मभ्यम्[९] | सम्प्र० |
| | (ते) | (वाम्) | (वः) | |
| पं० | त्वत्[१०] | युवाभ्याम् | युष्मत्[११] | अपा० |
| ष० | तव[१२] | युवयोः[१३] | युष्माकम्[१४] | सम्ब० |
| | (ते) | (वाम्) | (वः) | |
| स० | त्वयि[१५] | युवयोः | युष्मासु[१६] | अधि० |

**(२६३) त्रिषु लिङ्गेषु समानः सर्वनाम 'अस्मद्' शब्दः (मैं, हम)**

| | | | | |
|---|---|---|---|---|
| प्र० | अहम् | आवाम् | वयम् | कर्त्ता |
| द्वि० | माम् | आवाम् | अस्मान् | कर्म |
| | (मा) | (नौ) | (नः) | |
| तृ० | मया | आवाभ्याम् | अस्माभिः | करण |
| च० | मह्यम् | आवाभ्याम् | अस्मभ्यम् | सम्प्र० |
| | (मे) | (नौ) | (नः) | |
| पं० | मत् | आवाभ्याम् | अस्मत् | अपा० |
| ष० | मम | आवयोः | अस्माकम्[१७] | सम्ब० |
| | (मे) | (नौ) | (नः) | |

१ 'ङेप्रथमयोरम्' इत्यमि 'त्वाहौ सौ' इति मपर्यन्तस्य त्वादेशे 'शेषे लोपः' इत्यन्त्यलोपे च 'अतो गुणे' 'अमि पूर्वः'।

२ अमि, 'युवावौ द्विवचने' इति युवादेशे 'प्रथमयोश्चे'ति दकारस्य आत्वे पररूपे दीर्घे पूर्वरूपम्।

३ अमि 'यूयवयौ जसि' इति यूयादेशे पररूपे अदो लोपः।

४ 'त्वमावेकवचने' इति त्वादेशे 'द्वितीयायां च' इत्यात्वे पररूपे दीर्घे पूर्वरूपम्।

५ 'द्वितीयायां च' इत्यात्वे 'शसो नः', संयोगान्तलोपः।

६ त्वमादेशे 'योऽचि' इति दकारस्य यत्वे पररूपम्।

७ युवादेशे 'युष्मदस्मदोरनादेशे' इति दकारस्यात्वे सवर्णदीर्घः।

८ 'तुभ्यमह्यौ ङयि' 'ङेप्रथमयोरम्'। शेषे लोपः।

९ 'भ्यसो भ्यम्' इत्यत्र भ्यम्-अभ्यम् इति वा छेदः। ततश्च भ्यसः भ्यमादेशे अन्त्यलोपे पररूपम्।

१० त्वादेशे 'एकवचनस्य च' इत्यदादेशे पररूपे टिलोपः।

११ 'पञ्चम्या अत्'।

१२ 'तवममौ ङसि' इति तवादेशे 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यशादेशे पररूपे टिलोपः।

१३ युवादेशे 'योऽचि' इति यत्वे पररूपम्।

१४ अस्माकमितिवत्।

१५ त्वमादेशे यत्वे पररूपम्।

१६ 'युष्मदस्मदोरि'ति आत्वे सवर्णदीर्घः।

१७ 'साम आकम्' इत्याकमादेशे अन्त्यलोपे च सवर्णदीर्घः।

| स॰ | मयि | आवयोः | अस्मासु | अधि॰ |
|---|---|---|---|---|

**(२६४) त्वामतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्न 'अतियुष्मद्' शब्दः (तुमको अपनाने वाला, वाले)**

| | | | | |
|---|---|---|---|---|
| प्र॰ | अतित्वम् | अतित्वाम् | अतियूयम् | कर्त्ता |
| द्वि॰ | अतित्वाम् | अतित्वाम् | अतित्वान् | कर्म |
| तृ॰ | अतित्वया | अतित्वाभ्याम् | अतित्वाभिः | करण |
| चं॰ | अतितुभ्यम् | अतित्वाभ्याम् | अतित्वभ्यम् | सम्प्र॰ |
| पं॰ | अतित्वत् | अतित्वाभ्याम्. | अतित्वत् | अपा॰ |
| ष॰ | अतितव | अतित्वयोः | अतित्वाकम् | सम्ब॰ |
| स॰ | अतित्वयि | अतित्वयोः | अतित्वासु | अधि॰ |
| | हे अतित्वम् | हे अतित्वाम् | हे अतियूयम् | सम्बो॰ |

**(२६४) युवाम् अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्न 'अतियुष्मद्' शब्दः (तुम दोनों को अपनाने वाला, वाले)**

| | | | | |
|---|---|---|---|---|
| प्र॰ | अतित्वम् | अतियुवाम् | अतियूयम् | कर्त्ता |
| द्वि॰ | अतियुवाम् | अतियुवाम् | अतियुवान् | कर्म |
| तृ॰ | अतियुवया | अतियुवाभ्याम् | अतियुवाभिः | करण |
| च॰ | अतितुभ्यम् | अतियुवाभ्याम् | अतियुवभ्यम् | सम्प्र॰ |
| पं॰ | अतियुवत् | अतियुवाभ्याम् | अतियुवत् | अपा॰ |
| ष॰ | अतितव | अतियुवयोः | अतियुवाकम् | सम्ब॰ |
| स॰ | अतियुवयि | अतियुवयोः | अतियुवासु | अधि॰ |
| | हे अतित्वम् | हे अतियुवाम् | हे अतियूयम् | सम्बो॰ |

**(२६६) युष्मान् अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्न 'अतियुष्मद्' शब्दः (सबको अपनाने वाला, वाले)**

| | | | | |
|---|---|---|---|---|
| प्र॰ | अतित्वम् | अतियुष्माम् | अतियूयम् | कर्त्ता |
| द्वि॰ | अतियुष्माम् | अतियुष्माम् | अतियुष्मान् | कर्म |
| तृ॰ | अतियुष्मया | अतियुष्माभ्याम् | अतियुष्माभिः | करण |
| च॰ | अतितुभ्यम् | अतियुष्माभ्याम् | अतियुष्मभ्यम् | सम्प्र॰ |
| पं॰ | अतियुष्मत् | अतियुष्माभ्याम् | अतियुष्मत् | अपा॰ |
| ष॰ | अतितव | अतियुष्मयोः | अतियुष्माकम् | सम्ब॰ |
| स॰ | अतियुष्मयि | अतियुष्मयोः | अतियुष्मासु | अधि॰ |
| | हे अतित्वम् | हे अतियुष्माम् | हे अतियूयम् | सम्बो॰ |

**(२६७) माम् अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्न 'अत्यस्मद्' शब्दः (हमको अपनानेवाला, वाले)**

| | | | | |
|---|---|---|---|---|
| प्र॰ | अत्यहम् | अतिमाम् | अतिवयम् | कर्त्ता |
| द्वि॰ | अतिमाम् | अतिमाम् | अतिमान् | कर्म |

| | | | | |
|---|---|---|---|---|
| तृ० | अतिमया | अतिमाभ्याम् | अतिमाभिः | करण |
| च० | अतिमह्यम् | अतिमाभ्याम् | अतिमह्यम् | सम्प्र० |
| प्र० | अतिमत् | अतिमाभ्याम् | अतिमत् | अपा० |
| ष० | अतिमम | अतिमयोः | अतिमाकम् | सम्ब० |
| स० | अतिमयि | अतिमयोः | अतिमासु | अधि० |
| | हे अत्यहम् | हे अतिमाम् | हे अतिवयम् | सम्बो० |

(२६८) आवाम् अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्न 'अत्यस्मद्' शब्दः (हम दोनों को अपनाने वाला, वाले)

| | | | | |
|---|---|---|---|---|
| प्र० | अत्यहम् | अत्यावाम् | अतिवयम् | कर्त्ता |
| द्वि० | अत्यावाम् | अत्यावाम् | अत्यावान् | कर्म |
| तृ० | अत्यावया | अत्यावाभ्याम् | अत्यावाभिः | करण |
| च० | अतिमह्यम् | अत्यावाभ्याम् | अत्यावयम् | सम्प्र० |
| पं० | अत्यावत् | अत्यावाभ्याम् | अत्यावत् | अपा० |
| ष० | अतिमम | अत्यावयोः | अत्यावाकम् | सम्ब० |
| स० | अत्यावयि | अत्यावयोः | अत्यावसु | अधि० |
| | हे अत्यहम् | हे अत्यावाम् | हे अतिवयम् | सम्बो० |

(२६९) अस्मान् अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ताः वा इति विग्रहे निष्पन्नः 'अत्यस्मद्' शब्दः (हम सबको अपनाने वाला, वाले)

| | | | | |
|---|---|---|---|---|
| प्र० | अत्यहम् | अत्यस्माम् | अतिवयम् | कर्त्ता |
| द्वि० | अत्यस्माम् | अत्यस्माम् | अत्यस्मान् | कर्म |
| तृ० | अत्यस्मया | अत्यस्माभ्याम् | अत्यस्माभिः | करण |
| च० | अतिमह्यम् | अत्यस्माभ्याम् | अत्यस्मभ्यम् | सम्प्र० |
| पं० | अत्यस्मत् | अत्यस्माभ्याम् | अत्यस्मत् | अपा० |
| ष० | अतिमम | अत्यस्मयोः | अत्यस्माकम् | सम्ब० |
| स० | अत्यस्मयि | अत्यस्मयोः | अत्यस्मासु | अधि० |
| | हे अत्यहम् | हे अत्यस्माम् | हे अतिवयम् | सम्बो० |

(२७०) दकारान्तः पुल्लिङ्गः 'सुपाद्' शब्दः (सुन्दर पैर वाला)

| | | | | |
|---|---|---|---|---|
| प्र० | सुपात्-[1]द् | सुपादौ | सुपादः | कर्त्ता |
| द्वि० | सुपादम् | सुपादौ | सुपदः[2] | कर्म |
| तृ० | सुपदा | सुपाद्भ्याम् | सुपाद्भिः | करण |
| च० | सुपदे | सुपाद्भ्याम् | सुपाद्भ्यः | सम्प्र० |
| पं० | सुपदः | सुपाद्भ्याम् | सुपाद्भ्यः | अपा० |
| ष० | सुपदः | सुपदोः | सुपदाम् | सम्ब० |

१ सु = शोभनौ पादौ यस्येति बहुव्रीहिः 'संख्या सुपूर्वस्ये'ति पादस्यान्तलोपः।

२ 'पादः पत्'।

| स॰ | सुपदि | सुपदोः | सुपात्सु | अधि॰ |
|---|---|---|---|---|
| | हे सुपात्-द् | हे सुपादौ | हे सुपादः | सम्बो॰ |

(२७१) थान्तः पुल्लिङ्गः 'अग्निमथ्' शब्दः (अग्नि को मथन करने वाला)

| प्र॰ | अग्निमत्-[1]द् | अग्निमथौ | अग्निमथः | कर्त्ता |
|---|---|---|---|---|
| द्वि | अग्निमथम् | अग्निमथौ | अग्निमथः | कर्म |
| तृ॰ | अग्निमथा | अग्निमद्भ्याम्[2] | अग्निमद्भिः | करण |
| च॰ | अग्निमथे | अग्निमद्भ्याम् | अग्निमद्भ्यः | सम्प्र॰ |
| पं॰ | अग्निमथः | अग्निमद्भ्याम् | अग्निमद्भ्यः | अपा॰ |
| ष॰ | अग्निमथः | अग्निमथोः | अग्निमथाम् | सम्ब॰ |
| स॰ | अग्निमथि | अग्निमथोः | अग्निमत्सु | अधि॰ |
| | हे अग्निमत्-द् | हे अग्निमथौ | हे अग्निमथः | सम्बो॰ |

(२७२) चकारान्तो गतौ 'प्राञ्च्' शब्दः (पूर्व)

| प्र॰ | प्राङ्[3] | प्राञ्चौ[4] | प्राञ्चः | कर्त्ता |
|---|---|---|---|---|
| द्वि॰ | प्राञ्चम् | प्राञ्चौ | प्राचः[5] | कर्म |
| तृ॰ | प्राचा | प्राग्भ्याम्[6] | प्राग्भिः | करण |
| च॰ | प्राचे | प्राग्भ्याम् | प्राग्भ्यः | सम्प्र॰ |
| पं॰ | प्राचः | प्राग्भ्याम् | प्राग्भ्यः | अपा॰ |
| ष॰ | प्राचः | प्राचोः | प्राचाम् | सम्ब॰ |
| स॰ | प्राचि | प्राचोः | प्राक्षु | अधि॰ |
| | हे प्राङ् | हे प्राञ्चौ | हे प्राञ्चः | सम्बो॰ |

(२७३) चकारान्तो गतो 'प्रत्यञ्च्' शब्दः (पश्चिम)

| प्र॰ | प्रत्यङ्[7] | प्रत्यञ्चौ[8] | प्रत्यञ्चः | कर्त्ता |
|---|---|---|---|---|
| द्वि॰ | प्रत्यञ्चम् | प्रत्यञ्चौ | प्रतीचः[9] | कर्म |
| तृ॰ | प्रतीचा | प्रत्यग्भ्याम्[10] | प्रत्यग्भिः | करण |

१ अग्निं मन्थतीति 'अग्निमत्'। मथ्नातेर्मन्थतेश्च क्विपि 'अनिदिताम्'िति नलोपः।

२ 'स्वादिष्वि'ति पदत्वात्जश्त्वम्।

३ प्र अञ्चतीत्यर्थे 'अञ्चु गति-पूजनयोः' इति गत्यर्थकात् 'अञ्च्'धातोः 'ऋत्विगि'त्यादिसूत्रेण क्विन् तस्य सर्वापहारे, 'अनिदिताम्'िति नलोपे सवर्णदीर्घे नुमि संयोगान्तलोपे नस्य कुत्वेन ङकारः।

४ अनुस्वारपरसवर्णौ।

५ शसादावचि भत्वात् 'अचः' इत्यल्लोपे 'चौ' इति दीर्घः।

६ पदत्वात् 'चोः कुः' इति कुत्वे जश्त्वम्।

७ प्रतिपूर्वकात् गत्यर्थकाऽञ्च्धातोः क्विनि 'अनिदिताम्'िति नलोपे यणि प्रत्यच्शब्दात् सौ, ततः नुमि सुलोपे संयोगान्तलोपे च 'क्विन्प्रत्ययस्ये'ति कुत्वम्।

८ अनुस्वारपरसवर्णौ।

९ अत्रायं विशेषः—प्रति अञ्च् इति स्थिते, अन्तरङ्गोऽपि यण् इह न प्रवर्तते, 'अचः' इति लोपेन यण्निमित्तस्याऽकारस्य विनाशोन्मुखत्वेन 'अकृतव्यूहे'ति परिभाषानिषेधात्। ततश्च नलोपे शसि 'प्रति अच् अस्' इति स्थिते 'अचः' इत्यल्लोपे 'चौ' इति दीर्घः।

१० पदत्वात् 'चोः कुः' इति कुत्वम्।

| | | | | |
|---|---|---|---|---|
| च॰ | प्रतीचे | प्रत्यग्भ्याम् | प्रत्यग्भ्यः | सम्प्र॰ |
| पं॰ | प्रतीचः | प्रत्यग्भ्याम् | प्रत्यग्भ्यः | अपा॰ |
| ष॰ | प्रतीचः | प्रतीचोः | प्रतीचाम् | सम्ब॰ |
| स॰ | प्रतीचि | प्रतीचोः | प्रत्यक्षु | अधि॰ |
| | हे प्रत्यङ् | हे प्रत्यञ्चौ | हे प्रत्यञ्चः | सम्बो॰ |

(२७४) चकारान्तः पुल्लिङ्गो गतौ 'अमुमुयञ्च्' शब्दः (यह प्राप्त करने वाला)

| | | | | |
|---|---|---|---|---|
| प्र॰ | अमुमुयङ्[1] | अमुमुयञ्चौ | अमुमुयञ्चः | कर्त्ता |
| द्वि॰ | अमुमुयञ्चम् | अमुमुयञ्चौ | अमुमुईचः[2] | कर्म |
| तृ॰ | अमुमुईचा | अमुमुयग्भ्याम्[3] | अमुमुयग्भिः | करण |
| च॰ | अमुमुईचे | अमुमुयग्भ्याम् | अमुमुयग्भ्यः | सम्प्र॰ |
| पं॰ | अमुमुईचः | अमुमुयग्भ्याम् | अमुमुयग्भ्यः | अपा॰ |
| ष॰ | अमुमुईचः | अमुमुईचोः | अमुमुईचाम् | सम्ब॰ |
| स॰ | अमुमुईचि | अमुमुईचोः | अमुमुयक्षु | अधि॰ |
| | हे अमुमुयङ् | हे अमुमुयञ्चौ | हे अमुमुयञ्चः | सम्बो॰ |

(२७५) चकारान्तः पुल्लिङ्गो गतौ 'अदमुयञ्च्' शब्दः

| | | | | |
|---|---|---|---|---|
| प्र॰ | अदमुयङ्[4] | अदमुयञ्चौ | अदमुयञ्चः | कर्त्ता |
| द्वि॰ | अदमुयञ्चम् | अदमुयञ्चौ | अदमुईचः | कर्म |
| तृ॰ | अदमुईचा | अदमुयग्भ्याम् | अदमुयग्भिः | करण |
| च॰ | अदमुईचे | अदमुयग्भ्याम् | अदमुयग्भ्यः | सम्प्र॰ |
| पं॰ | अदमुईचः | अदमुयग्भ्याम् | अदमुयग्भ्यः | अपा॰ |
| ष॰ | अदमुईचः | अदमुईचोः | अदमुईचाम् | सम्ब॰ |
| स॰ | अदमुईचि | अदमुईचोः | अदमुयक्षु | अधि॰ |
| | हे अदमुयङ् | हे अदमुयञ्चौ | हे अदमुयञ्चः | सम्बो॰ |

(२७६) चकारान्तः पुल्लिङ्गो गतौ 'सम्यञ्च्' शब्दः (ठीक चलनेवाला)

| | | | | |
|---|---|---|---|---|
| प्र॰ | सम्यङ्[5] | सम्यञ्चौ | सम्यञ्चः | कर्त्ता |
| द्वि॰ | सम्यञ्चम् | सम्यञ्चौ | समीचः | कर्म |
| तृ॰ | समीचा | सम्यग्भ्याम् | सम्यग्भिः | करण |

१ अमुमुञ्चतीति विग्रहे क्विनि उपपदसमासे 'अदस् अञ्च्' इति दशायां परत्वात् 'अनिदितामि'ति नलोपे 'अदस् अच्' इति स्थिते 'विष्वग्देवयोश्चे'ति (अत्र सूत्रे अप्रत्यय इति अविद्यमानः प्रत्ययोऽप्रत्ययः क्विन्क्विबादिरिति यावत्) अदसः टेः 'अद्रि' आदेशे यणि नुमि सुलोपे संयोगान्तलोपे नकारस्य कुत्वेन ङकारे च 'अदद्र्यङ्' इति स्थिते 'अदसोऽसेरि'ति (अत्र सूत्रे अदसः, असेः, दात्, उ, दः, मः इति छेदः) प्रथमदकारस्य मत्वे तदुत्तरस्याकारस्य उत्वम्, एवं द्वितीयदकारस्यापि मत्वे तदुत्तरस्य रेफस्य च मत्वम्।

२ अन्तरङ्गोऽपि यण् 'अचः' इति लोपविषये न प्रवर्तते इति।

३ 'अमुमु+इ+अच् भ्याम्' इति स्थिते इकारे परे उकारस्य यण् तु न मुत्वस्याऽसिद्धत्वात्।

४ 'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते'॥ इति वार्तिककृदुक्तिः।

५ सङ्गतमञ्चतीति विग्रहे क्विन्नाद्युत्तरं 'समः समि' इति सम्यादेशे 'प्रत्यञ्च्'शब्दवदन्यत् कार्यम्।

| | | | | |
|---|---|---|---|---|
| च॰ | समीचे | सम्यग्भ्याम् | सम्यग्भ्यः | सम्प्र॰ |
| पं॰ | समीचः | सम्यग्भ्याम् | सम्यग्भ्यः | अपा॰ |
| ष॰ | समीचः | समीचोः | समीचाम् | सम्ब॰ |
| स॰ | समीचि | समीचोः | सम्यक्षु | अधि॰ |
| | हे सम्यङ् | हे सम्यञ्चौ | हे सम्यञ्चः | सम्बो॰ |

(२७७) चकारान्तः पुल्लिङ्गे गतौ 'सध्र्यञ्च्' शब्दः (साथी)

| | | | | |
|---|---|---|---|---|
| प्र॰ | सध्र्यङ्[1] | यध्र्यञ्चौ | सध्र्यञ्चः | कर्त्ता |
| द्वि॰ | सध्र्यञ्चम् | सध्र्यञ्चौ | सध्रीचः | कर्म |
| तृ॰ | सध्रीचा | सध्र्यग्भ्याम् | सध्र्यग्भिः | करण |
| च॰ | सध्रीचे | सध्र्यग्भ्याम् | सध्र्यग्भ्यः | सम्प्र॰ |
| पं॰ | सध्रीचः | सध्र्यग्भ्याम् | सध्र्यग्भ्यः | अपा॰ |
| ष॰ | सध्रीचः | सध्रीचोः | सध्रीचाम् | सम्ब॰ |
| स॰ | सध्रीचि | सध्रीचोः | सध्र्यक्षु | अधि॰ |
| | हे सध्र्यङ् | हे सध्र्यञ्चौ | हे सध्र्यञ्चः | सम्बो॰ |

(२७८) चकारान्तः पुल्लिङ्गे गतौ 'अदद्र्यञ्च्' शब्दः

| | | | | |
|---|---|---|---|---|
| प्र॰ | अदद्र्यङ् | अदद्र्यञ्चौ | अदद्र्यञ्चः | कर्त्ता |
| द्वि॰ | अदद्र्यञ्चम् | अदद्र्यञ्चौ | अदद्रीचः | कर्म |
| तृ॰ | अदद्रीचा | अदद्र्यग्भ्याम् | अदद्र्यग्भिः | करण |
| च॰ | अदद्रीचे | अदद्र्यग्भ्याम् | अदद्र्यग्भ्यः | सम्प्र॰ |
| पं॰ | अदद्रीचः | अदद्र्यग्भ्याम् | अदद्र्यग्भ्यः | अपा॰ |
| ष॰ | अदद्रीचः | अदद्रीचोः | अदद्रीचाम् | सम्ब॰ |
| स॰ | अदद्रीचः | अदद्रीचोः | अदद्र्यक्षु | अधि॰ |
| | हे अदद्र्यङ् | हे अदद्र्यञ्चौ | हे अददद्र्यञ्चः | सम्बो॰ |

(२७९) चकारान्तः पुल्लिङ्गे गतौ 'उदञ्च्' शब्दः (उत्तर)

| | | | | |
|---|---|---|---|---|
| प्र॰ | उदङ्[2] | उदञ्चौ | उदञ्चः | कर्त्ता |
| द्वि॰ | उदञ्चम् | उदञ्चौ | उदीचः[3] | कर्म |
| तृ॰ | उदीचा | उदग्भ्याम् | उदग्भिः | करण |
| च॰ | उदीचे | उदग्भ्याम् | उदग्भ्यः | सम्प्र॰ |
| पं॰ | उदीचः | उदग्भ्याम् | उदग्भ्यः | अपा॰ |
| ष॰ | उदीचः | उदीचोः | उदीचाम् | सम्ब॰ |
| स॰ | उदीचि | उदीचोः | उदक्षु | अधि॰ |
| | हे उदङ् | हे उदञ्चौ | हे उदञ्चः | सम्बो॰ |

१ सह अञ्चति = गच्छति, इति विग्रहे क्विन्नाद्युत्तरं 'सहस्य सध्रिः' इति सध्र्यादेशे यणि अत्रापि 'प्रत्यञ्च्'-शब्दवत् कार्यं बोध्यम् ।'

२ उत् अञ्चतीति विग्रहः । क्विन्नादिकार्यं 'प्राञ्च्'शब्दवत्, अत्र दीर्घाभावः इति विशेषः ।

३ शसादावचि भत्वाद् 'अचः' इत्यल्लोपे प्राप्ते 'उद ईत्' इति ईत्वम् ।

(२८०) चकारान्तः पुल्लिङ्गो गतौ 'तिर्यञ्च्' शब्दः (टेढ़ा-मेढा चलने वाला, पशु-पक्षी)

| | | | | |
|---|---|---|---|---|
| प्र० | तिर्यङ्[1] | तिर्यञ्चौ | तिर्यञ्चः | कर्त्ता |
| द्वि० | तिर्यञ्चम् | तिर्यञ्चौ | तिरश्चः[2] | कर्म |
| तृ० | तिरश्चा | तिर्यग्भ्याम् | तिर्यग्भिः | करण |
| च० | तिरश्चे | तिर्यग्भ्याम् | तिर्यग्भ्यः | सम्प्र० |
| पं० | तिरश्चः | तिर्यग्भ्याम् | तिर्यग्भ्यः | अपा० |
| ष० | तिरश्चः | तिरश्चोः | चिरश्चाम् | सम्ब० |
| स० | तिरश्चि | तिरश्चोः | तिर्यक्षु | अधि० |
| | हे तिर्यङ् | हे तिर्यञ्चौ | हे तिर्यञ्चः | सम्बो० |

(२८१) चकारान्तः पुल्लिङ्गः पूजायां 'प्राञ्च्' शब्दः (पूजनीय)

| | | | | |
|---|---|---|---|---|
| प्र० | प्राङ्[3] | प्राञ्चौ | प्राञ्चः | कर्त्ता |
| द्वि० | प्राञ्चम् | प्राञ्चौ | प्राञ्चः[4] | कर्म |
| तृ० | प्राञ्चा | प्राङ्भ्याम् | प्राङ्भिः | करण |
| च० | प्राञ्चे | प्राङ्भ्याम् | प्राङ्भ्यः | सम्प्र० |
| पं० | प्राञ्चः | प्राङ्भ्याम् | प्राङ्भ्यः | अपा० |
| ष० | प्राञ्चः | प्राञ्चोः | प्राञ्चाम् | सम्ब० |
| स० | प्राञ्चि | प्राञ्चोः | प्राङ्खषु[5]<br>प्राङ्क्षु<br>प्राङ्षु | अधि० |
| | हे प्राङ् | हे प्राञ्चौ | हे प्राञ्चः | सम्बो० |

एवं पूजार्थे प्रत्यञ्च्-उदञ्च्-सम्यञ्च्-सध्र्यञ्च्-तिर्यञ्च्-अमुमुयञ्च्-अदमुयञ्च्-अदद्र्यञ्च्-शब्दानामपि बोध्यम्।

(२८२) चकारान्तः पुल्लिङ्गः 'क्रुञ्च्' शब्दः (क्रौंच पक्षी)

| | | | | |
|---|---|---|---|---|
| प्र० | क्रुङ्[6] | क्रुञ्चौ | क्रुञ्चः | कर्त्ता |
| द्वि० | क्रुञ्चम् | क्रुञ्चौ | क्रुञ्चः | कर्म |
| तृ० | क्रुञ्चा | क्रुङ्भ्याम् | कुङ्भिः | करण |
| च० | क्रुञ्चे | क्रुङ्भ्याम् | क्रुङ्भ्यः | सम्प्र० |

१ तिरः = कुटिलम्, अञ्चति = गच्छति, इति विग्रहे पूर्ववत् क्विन्नादेशोत्तरं 'तिरसस्तिर्यलोपे' इति तिरसः तिर्यादेशे यणि कुत्वादिकं पूर्ववत्।

२ शसादावचि 'अचः' इति लोपसत्वेन तिर्यभावे श्चुत्वम्।

३ 'अञ्चु गतिपूजनयोः' तत्र पूजार्थे 'अनिदितामि'ति नलोपे' 'नाञ्चेः पूजायामि'ति निषिध्यते। यत्तु नलोपे निषेधेऽपि नुमा नकारद्वयश्रवणं दुर्वारमिति तन्न, 'उगिदचामि'ति सूत्रे नलोपिनोऽञ्चतेरेव ग्रहणात्।

४ शसादावचि 'अचः' इत्यल्लोपो न भवति, तत्र सूत्रेऽपि लुप्तनकारस्याञ्चतेरेव ग्रहणात्।

५ प्राङ् सु इति दशायां 'ङ्णोः कुक्टुक् शरि' इति कुकि, 'चयो द्वितीयाः' इति खकारे च कवर्गात् परत्वेन षत्वम्।

६ 'क्रुञ्च् कौटिल्याल्पीभावयोः' अस्मात् निरुपपदात् 'ऋत्विग्' इत्यादिना निपानात् क्विनि नलोपाभावे च हल्ङ्यादिना सुलोपे संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्ये'ति कुत्वम्।

| | | | | |
|---|---|---|---|---|
| पं॰ | क्रुञ्चः | क्रुङ्भ्याम् | क्रुङ्भ्यः | अपा॰ |
| ष॰ | क्रुञ्चः | क्रुञ्चोः | क्रुञ्चाम् | सम्ब॰ |
| स॰ | क्रुञ्चि | क्रुञ्चोः | क्रुङ्खषु<br>क्रुङ्क्षु-क्रुङ्षु | अधि॰ |
| | हे क्रुङ् | हे क्रुञ्चौ | हे क्रुञ्चः | सम्बो॰ |

(२८३) चकारान्तः पुल्लिङ्गः 'पयोमुच्' शब्दः (मेघ)

| | | | | |
|---|---|---|---|---|
| प्र॰ | पयोमुक्-[1]ग् | पयोमुचौ | पयोमुचः | कर्त्ता |
| द्वि॰ | पयोमुचम् | पयोमुचौ | पयोमुचः | कर्म |
| तृ॰ | पयोमुचा | पयोमुग्भ्याम् | पयोमुग्भिः | करण |
| च॰ | पयोमुचे | पयोमुग्भ्याम् | पयोमुग्भ्यः | सम्प्र॰ |
| पं॰ | पयोमुचः | पयोमुग्भ्याम् | पयोमुग्भ्यः | अपा॰ |
| ष॰ | पयोमुचः | पयोमुचोः | पयोमुचाम् | सम्ब॰ |
| स॰ | पयोमुचि | पयोमुचोः | पयोमुक्षु | अधि॰ |
| | हे पयोमुक्-ग् | हे पयोमुचौ | हे पयोमुचः | सम्बो॰ |

(२८४) चकारान्तः पुल्लिङ्गः 'सुवृश्च्' शब्दः (अच्छा काटनेवाला)

| | | | | |
|---|---|---|---|---|
| प्र॰ | सुवृट्-[2]ड् | सुवृश्चौ | सुवृश्चः | कर्त्ता |
| द्वि॰ | सुवृश्चम् | सुवृश्चौ | सुवृश्चः | कर्म |
| तृ॰ | सुवृश्चा | सुवृड्भ्याम् | सुवृड्भिः | करण |
| च॰ | सुवृश्चे | सुवृड्भ्याम् | सुवृड्भ्यः | सम्प्र॰ |
| पं॰ | सुवृश्चः | सुवृड्भ्याम् | सुवृड्भ्यः | अपा॰ |
| ष॰ | सुवृश्चः | सुवृश्चोः | सुवृश्चाम् | सम्ब॰ |
| स॰ | सुवृश्चि | सुवृश्चोः | सुवृट्त्सु-सुवृट्सु | अधि॰ |
| | हे सुवृट्-ड् | हे सुवृश्चौ | हे सुवृश्चः | सम्बो॰ |

(२८५) तकारान्तः पुल्लिङ्गो 'महत्' शब्दः (महान्, श्रेष्ठ)

| | | | | |
|---|---|---|---|---|
| प्र॰ | महान्[3] | महान्तौ | महान्तः | कर्त्ता |
| द्वि॰ | महान्तम् | महान्तौ | महतः | कर्म |
| तृ॰ | महता | महद्भ्याम् | महद्भिः | करण |
| च॰ | महते | महद्भ्याम् | महद्भ्यः | सम्प्र॰ |
| पं॰ | महतः | महद्भ्याम् | महद्भ्यः | अपा॰ |
| ष॰ | महतः | महतोः | महताम् | सम्ब॰ |

१ पयः मुञ्चतीति पयोमुक्, 'मुच्लृ मोक्षणे' अस्मात् क्विप्। सुलोपे कुत्वे जश्त्वचर्त्वे।

२ सुष्टु वृश्चतीति 'सुवृट्' सुपूर्वात् 'ओव्रश्चू छेदने' इति धातोः क्विपि 'ग्रहिज्ये'ति सम्प्रसारणे 'सुवृश्च्' शब्दः। ततः स्वादिकार्यम्।

३ मह्यते = पूज्यते इति महान्, 'कर्तरि कृत्' इति कर्त्रर्थं बाधित्वा 'वर्तमाने पृषन्–'इत्युणादिसूत्रेण महेः कर्मणि अति प्रत्ययः शतृवद्भावश्च निपात्यते (शतृवद्भावेन सुटि उगित्वात् नुम् भवतीति बोध्यम्)। ततश्च महत्शब्दात् सौ 'उगिदचा'मिति नुमि 'सान्तमहतः' इति सर्वनामस्थाने परे दीर्घे सति सुलोपे संयोगान्तलोपः।

| | | | | |
|---|---|---|---|---|
| स॰ | महति | महतोः | महत्सु | अधि॰ |
| | हे महन्[1] | हे महान्तौ | हे महान्तः | सम्बो॰ |

(२८६) तकारान्तः पुल्लिङ्गे 'धीमत्' शब्दः (बुद्धिमान्)

| | | | | |
|---|---|---|---|---|
| प्र॰ | धीमान्[2] | धीमन्तौ[3] | धीमन्तः | कर्त्ता |
| द्वि॰ | धीमन्तम् | धीमन्तौ | धीमतः[4] | कर्म |
| तृ॰ | धीमता | धीमद्भ्याम् | धीमद्भिः | करण |
| च॰ | धीमते | धीमद्भ्याम् | धीमद्भ्यः | सम्प्र॰ |
| पं॰ | धीमतः | धीमद्भ्याम् | धीमद्भ्यः | अपा॰ |
| ष॰ | धीमतः | धीमतोः | धीमताम् | सम्ब॰ |
| स॰ | धीमति | धीमतोः | धीमत्सु | अधि॰ |
| | हे धीमन् | हे धीमन्तौ | हे धीमन्तः | सम्बो॰ |

(२८७) तकारान्तः पुल्लिङ्गे 'गोमत्' शब्दः (गौ को रखनेवाला गोमान्, उसकी इच्छा करनेवाला)

| | | | | |
|---|---|---|---|---|
| प्र॰ | गोमान्[5] | गोमन्तौ | गोमन्तः | कर्त्ता |
| द्वि॰ | गोमन्तम् | गोमन्तौ | गोमतः | कर्म |
| तृ॰ | गोमता | गोमद्भ्याम् | गोमद्भिः | करण |
| च॰ | गोमते | गोमद्भ्याम् | गोमद्भ्यः | सम्प्र॰ |
| पं॰ | गोमतः | गोमद्भ्याम् | गोमद्भ्यः | अपा॰ |
| ष॰ | गोमतः | गोमतोः | गोमताम् | सम्ब॰ |
| स॰ | गोमति | गोमतोः | गोमत्सु | अधि॰ |
| | हे गोमन् | हे गोमन्तौ | हे गोमन्तः | सम्बो॰ |

(२८८) एवं श्रीमत्— श्रीमान् श्रीमन्तौ श्रीमन्तः।

(२८९) बुद्धिमत्— बुद्धिमान् बुद्धिमन्तौ बुद्धिमन्तः।

(२९०) भगवत्— भगवान् भगवन्तौ भगवन्तः।

(२९१) यावत्—यावान् यावन्तौ यावन्तः।(२९२) तावत्—तावान् तावन्तौ तावन्तः।

(२९३) एतावत्—एतावान् एतावन्तौ एतावन्तः।

(२९४) कियत्—कियान् कियन्तौ कियन्तः।

---

१ असम्बुद्धावित्युक्तेर्न दीर्घः।

२ धीरस्यास्तीत्यर्थे 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुपि, धीमत्शब्दात् सौ 'अत्वसन्तस्ये'ति दीर्घे नुमि सुलोपे संयोगान्तलोपः।

३ 'अत्वसन्तस्ये'ति सूत्रे असम्बुद्धौ सौ परे इत्युक्तत्वात् औजसादिषु न दीर्घः।

४ शसादौ महद्वत् कार्यं बोध्यम्।

५ गावोऽस्त्यस्मिन् वा सन्तीति गोमान्, अस्त्यर्थे मतुप्। ततः गोमन्तमिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यचि, क्यजन्तस्य 'सनाद्यन्ताः' इति धातुत्वात् कर्तरि क्विपि 'यस्य हलः' 'अतो लोपः' इति यलोपाऽल्लोपयोर्गोमच्छब्दात् सुबुत्पत्तिः।

(२९५) इयत्—इयान् इयन्तौ इयन्तः इत्यादि।

(२९६) तकारान्तः पुल्लिङ्गः सर्वनाम 'भवत्' शब्दः (आप)

| | | | | |
|---|---|---|---|---|
| प्र॰ | भवान्[१] | भवन्तौ | भवन्तः | कर्त्ता |
| द्वि॰ | भवन्तम् | भवन्तौ | भवतः | कर्म |
| तृ॰ | भवता | भवद्भ्याम् | भवद्भिः | करण |
| च॰ | भवते | भवद्भ्याम् | भवद्भ्यः | सम्प्र॰ |
| पं॰ | भवतः | भवद्भ्याम् | भवद्भ्यः | अपा॰ |
| ष॰ | भवतः | भवतोः | भवताम् | सम्ब॰ |
| स॰ | भवति | भवतोः | भवत्सु | अधि॰ |

(२९७) शत्रन्तो 'भवत्' शब्दः (होता हुआ)

| | | | | |
|---|---|---|---|---|
| प्र॰ | भवन्[२] | भवन्तौ | भवन्तः | कर्त्ता |
| द्वि॰ | भवन्तम् | भवन्तौ | भवतः | कर्म |

शेषं डवतुप्रत्ययान्तवत्।

एवं कुर्वत्, ब्रुवत्, जानत्, करिष्यत्, गमिष्यत् इत्यादयोऽनभ्यस्तसंज्ञकाः।

(२९८) शत्रन्तोऽभ्यस्तसंज्ञको 'ददत्' शब्दः (देता हुआ)

| | | | | |
|---|---|---|---|---|
| प्र॰ | ददत्[३] | ददतौ | ददतः | कर्त्ता |
| द्वि॰ | ददतम् | ददतौ | ददतः | कर्म |
| तृ॰ | ददता | ददद्भ्याम् | ददद्भिः | करण |
| च॰ | ददते | ददद्भ्याम् | ददद्भ्यः | सम्प्र॰ |
| पं॰ | ददतः | ददद्भ्याम् | ददद्भ्यः | अपा॰ |
| ष॰ | ददतः | ददतोः | ददताम् | सम्ब॰ |
| स॰ | ददति | ददतोः | ददत्सु | अधि॰ |
| | हे ददत्-द् | हे ददतौ | हे ददतः | सम्बो॰ |

(२९९) शत्रन्तोऽभ्यस्तसंज्ञको 'जक्षत्' शब्दः (हँसता हुआ)

| | | | | |
|---|---|---|---|---|
| प्र॰ | जक्षत्-[४]द् | जक्षतौ | जक्षतः | कर्त्ता |
| द्वि॰ | जक्षतम् | जक्षतौ | जक्षतः | कर्म |

१ 'मातेर्डवतुः' इत्युणादिसूत्रेण माधातोर्डवतुप्रत्यये डित्वाट्टिलापे च 'भवत्' शब्दः। तस्मात् सौ 'अत्वसन्तस्ये'ति दीर्घे नुमि सुलोपे संयोगान्तलोपः।

२ भूधातोर्लटः शत्रादेशे शपि गुणावादेशयोः पररूपे 'भवत्' शब्दः। तस्मात् सौ अत्वसन्त्वाभावेन दीर्घाऽभावात् नुमादिकार्यं पूर्ववत्।

३ ददातीति 'ददत्' दाञो लटः शत्रादेशे शपः श्लौ 'श्लावि'ति द्वित्वे अभ्यासस्य ह्रस्वे च 'श्नाभ्यस्तयो-रित्याल्लोपे 'ददत्' शब्दः। तस्मात् स्वादिकार्यम्।

४ 'जक्ष हसने, जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीप्तौ, शासु अनुशिष्टौ, दीधीङ् दीप्तिदेवनयोः, वेविङ् वेतिना तुल्ये' इति सप्त लुब्विकरणाः अदादौ पठिताः। तेभ्यो लटः शत्रादेशे शब्लुकि सुबुत्पत्तौ हल्ङ्यादिलोपः। नुम् तु न; 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायां 'नाभ्यस्ताच्छतुः' इति निषेधात्। अन्यत् सर्वं कार्यं सुलभम्।

